शच्या कर्मणा शच्या शचीति कर्मनाम [निघ॰ २ १] मनो न मन-इव तिग्मम् तिग्मं तेजतेरुत्साहकर्मणा इति यास्कः [निरु॰ १० ६] मनोवदुत्साहयुक्त यथा तथा वनुथ प्रथमपुरुषस्थाने मध्यमपुरुषश्छान्दसः वनुत व्याप्नुत युगपत् शुक्रामन्थिग्रहाविति शेषः शचीति निमित्ततृतीया वा कर्मनिमित्तं व्याप्नुत इत्यर्थः । किम्भूतौ विपश्चितौ इयता इयता गच्छतो हवनेषु तेष्वेव कर्तव्येषु होमेषु प्रचरन्तौ । यो ऽध्वर्युः शर्याभिः अङ्गुलीभिर्गभस्तौ पाणौ स्थितास्यास्य मन्थिग्रहस्य कर्माणि यष्टी इन मन्थिनमादिशं प्रतिदिशमा अर्णोति समन्तात् अर्णोति सक्तुभिर्मिश्रयति किम्भूतो यः तुविनृम्णः तुवि नृम्णा यस्य बहुधनः महादक्षिणः तुवीति बहुनाम [निघ॰ ३. १] नृम्णमिति धननाम [निघ॰ २ १०] । यद्यप्यत्राध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः सक्तुभिः श्रयणं करोति स एव प्रधान इत्याशयः ॥ एष तऽइति सादयति । हे मन्थिग्रह ते तव एष योनिः प्रदेशः त्व प्रजा यजमानसम्बन्धिनी पाहि पालय ॥ का॰ [९ १० ५] अपमृष्टो मर्क इति प्रतिप्रस्थातेति । प्रतिप्रस्थाता प्रोक्षितेन यूपशकलेन मन्थिनमाछाद्याप्रोक्षितेनापमार्ष्टि ॥ अपमार्जनीकृतो मर्को नामासुरपुरोहित ॥ का॰ [९. १० ६] देवास्त्वेति निष्क्रामतो यथालिङ्गमिति । प्रतिप्रस्थाता हविर्धानान्निष्क्रामेत् ॥ मन्थिदेवतम् हे मन्थिग्रह मन्थिन ग्रहः पिबतीति मन्थिपा देवा त्वा प्रणयन्तु यज्ञस्थानं प्रापयन्तु ॥ अनाधृष्टासीति म न्त्रो विनियोगसहितः पूर्वं [क॰ १२] व्याख्यातः ॥१७॥

a सुप्रजाः प्रजाः प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् ।
b संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा ।
c निरस्तो मर्कः । d मन्थिनोऽधिष्ठानमसि ॥१८॥

का॰ [९ १० ९] सुप्रजा इति प्रतिप्रस्थातोत्तरमिति । प्रतिप्रस्थातोत्तरं यूपदेशं गच्छति ॥ मन्थिदेवतम् हे मन्थिग्रह शोभना प्रजा यस्य स सुप्रजास्त्वं यजमानसम्बन्धिनी प्रजा प्रजनयन् उत्पादयन् सन् रायस्पोषेण धनस्य पुष्ट्या सह यजमानमभि यजमानसमुख परीहि परिगच्छ आगच्छ ॥ का॰ [९. १० १०] अपरेण यूपमक्षौ संयन्त संजग्मान इति । प्रतिप्रस्थातारौ संयत्तऽइत्युक्तम् ॥ मन्थी नाम

यन्हो दिवा पृथिव्या द्युलोकभूलोकाभ्यां संरुग्माना संगह्नानः सन् मन्थिशोचिषा मन्थिनः स्वस्यैव दीप्त्या यूप विभर्तीति शेषः ॥ का° [१ १० ११] निरस्तो मर्क इति प्रतिप्रस्थातेति । प्रतिप्रस्थाता अग्रोक्षित यूपशकलं निरस्येत् ॥ आभिचारिकम् मर्कनामासुरपुरोहितो निरस्तो निराकृतः ॥ का° [१ १० १३] मन्थिन इति प्रतिप्रस्थातेति । प्रतिप्रस्थाता प्रोक्षित यूपशकलमाहवनीये प्रक्षिपेत् ॥ शकलदेवतम् हे यूपशकल त्व मन्थिग्रहस्याधिष्ठानमधिकरणमसि ॥१८॥

VIII ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।

अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिम जुषध्वम् ॥१९॥

का° [९.६ १४] आग्रयणं द्वयोर्धारयोर्ये देवास इति । धाराद्वये क्षरति सत्याग्रयणं ग्रहं गृह्णीयात् ॥ वैश्वदेवी त्रिष्टुप् पहच्छेपदृष्टा । हे देवासः देवाः ये यूयं दिवि द्युलोके एकादश स्थ एकादशसंख्याका भवथ केन महिना महिम्ना स्व स्वमहिम्ना स्वस्वमाहात्म्येन महिनेति पदं त्रिष्वपि स्थानेषु संबध्यते सर्वत्र महाभाग्याविशेषात् तथा पृथिव्यामधि पृथिव्युपरि एकादश स्थ तथा ये यूयमप्सुक्षितः अन्तरिक्षनिवासिन एकादश स्थ भवथ । अप्स्विति अन्तरिक्षनामसु [निघ° १.३ (18.)] पठितम् क्षियतिर्निवासार्थः अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीत्यर्थः हे देवासः देवास्ते त्रिविधा यूयमिमं यज्ञं यजनीयमाग्रयणग्रहं जुषध्वं सेवध्वम् ॥१९॥

उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभि सवनानि पाहि ॥२०॥

आग्रयणदैवतं यजुराग्रयणग्रहणाऽएव विनियुक्तम् हे आग्रयणग्रह त्वमुपयामेन पात्रेण स्वीकृतोऽसि । आग्रयणोऽसि आग्रयणनामा भवसि किम्भूतस्त्वम् स्वाग्रयणः अग्रस्य भावः आग्रम् सुष्ठु आग्रं स्वाग्रं श्रैष्ठ्यम् अयति प्रापयतीति स्वाग्रयणः अग्रशब्दस्यायतौ परे टिलोपः । तादृशस्त्वं यज्ञं पाहि रक्ष यज्ञपतिं यजमानं च पाहि । विष्णुः यज्ञाधिष्ठाता देव इन्द्रियेण स्वसामर्थ्येन त्वां पातु त्वमपि तादृशं विष्णुं पाहि रक्ष । सवनानि प्रातरादीनि अभि पाहि सर्वतो रक्ष ॥२०॥

तत्र ग्रहस्य विनियोगः ॥ किं च एवं सोममुक्त्वा इन्द्रमाह हे इन्द्र यत्ते तव बृहन् महत् वयोऽन्नं सोमरूपमस्ति तस्मै तत्पानार्थं त्वां प्रार्थये इति शेषः । हे सोम विश्वये विश्वदेवतार्थं त्वां गृह्णामि । यद्वा हे इन्द्र यत्ते तव बृहत् महत् अर्जितम् वयः यौवनलक्षणं तस्मै सोम त्वां गृह्णामि । अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्ष इन्द्र उच्यते त्वेति युष्मदा सोम उच्यते प्रत्यक्ष तयोः सामर्थ्यं नास्ति तमस्ते इत्यस्य पदस्य अन्वेत्यनेन व्यत्ययः इन्द्रेत्यस्येन्द्रस्येत्यनेन पदेन व्यत्ययः तत्रायमर्थः हे सोम यदस्येन्द्रस्य बृहद्वयो तस्मै त्वा गृह्णामि विश्वत्रे यज्ञाय च त्वां गृह्णामि ॥ एष तऽइति सादनम् । हे ग्रह एष ते तव योनिः स्थानमनुस्थेभ्योऽर्थाय त्वां सादयामीति शेषः ॥ का॰ [९ १४ ८] उक्थ्यं विगृह्णाति त्रेधं देवेभ्यस्त्वेति सर्वेभ्य इति । उक्थ्यस्थालीस्थं सोमं त्रेधा विभज्य गृह्णाति । सर्वेभ्यः प्रशास्तृब्राह्मणाच्छंस्यच्छावाकेभ्यस्तत्कृतयागार्थमित्यर्थः ॥ हे सोम देवेभ्योऽर्थाय त्वा गृह्णामि किम्भूतं त्वाम् देवाव्यम् देवानवति तर्पयतीति देवावीस्तम् किमर्थम् यज्ञस्यायुषे अनवच्छिन्ना कर्मकदोषरहिता (20) परिसमाप्तिर्यज्ञस्यायुस्तस्मै यज्ञसमाप्तये फलपर्यन्तमवस्थानाय च गृह्णामि । यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुषे गृह्णामि ॥२२॥

a मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि । b इन्द्राय त्वा दे॰ ।
c इन्द्राग्निभ्यां त्वा दे॰ । d इन्द्रावरुणाभ्यां त्वा दे॰ । e इन्द्राबृहस्पतिभ्यां त्वा दे॰ । f इन्द्राविष्णुभ्यां त्वा दे॰ ॥२३॥

का॰ [९.१४ ९] मित्रावरुणाभ्यां त्वेति वा प्रशास्त्रऽइति । मैत्रावरुणायोक्थ्यविग्रहे मन्त्रविकल्पः ॥ मित्रावरुणाभ्यामर्थं देवाव्यं देवतर्पकं त्वां यज्ञस्यायुषे गृह्णामि ॥ का॰ [९.१४ १५.] एव प्रतिमन्त्रातोत्तराभ्यामिन्द्राय त्वेति ब्राह्मणाच्छंसिनऽइन्द्राग्निभ्यां त्वेत्यच्छावाकायेति । ब्राह्मणाच्छंस्यच्छावाकाभ्यां मन्त्रविकल्पावेवम् ॥ इन्द्राय त्वां गृह्णामि इन्द्राग्निभ्यामर्थं त्वां गृह्णामि शेषं पूर्ववत् ॥ का॰ [१० ० ११] उत्तरैरिन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति । उक्थ्यादिसोमसंस्थेषु मैत्रावरुणादीनां तृतीयसवने उक्थ्यविग्रहमन्त्राः ॥ इन्द्रावरुणयोरर्थं त्वां देवा

त्वं यज्ञस्यायुषे गृह्णामि । इत्रमिन्द्राबृहस्पतिभ्यामर्थे त्वां गृह्णामि । इन्द्राविष्णुभ्यामर्थे त्वां गृह्णामि ॥ मित्रावरुणाभ्यामित्यादौ देवताद्वन्द्वे चेति [पा॰ ६ ३·२६] पूर्वपदान्तस्य दीर्घः ॥२३॥

X मूर्धानं दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआ जातमग्निम् ।
कविᳪ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥२४॥

का॰ [९ ६ २१] ध्रुवं मूर्धानं दिव इति । ध्रुवमेतं ग्रहं गृह्णीयात् ॥ वैश्वानरदेवत्या त्रिष्टुब्भरद्वाजदृष्टा वैश्वानरश्चात्र सर्वात्मना स्तूयते । देवा ईदृशमग्निं जनयन्त उत्पादितवन्तः अडागमाभाव आर्षः । किम्भूतमग्निम् दिवो मूर्धानं द्युलोकस्य शिरोवदुन्नतप्रदेशे सूर्यरूपेणावस्थाय भासकम् । तथा पृथिव्या अरतिम् रतिरुपरतिस्तद्रहितम् नहि पृथिव्या उपरि कदाचिदप्यग्निरुपरमते किंतु दाहपाकप्रकाशैः सर्वाननुगृह्णन् सर्वदा वर्तत एव यद्वा पृथिवीशब्देनान्तरिक्षमुच्यते आकाशमापः पृथिवीत्यन्तरिक्षनामसु [निघ॰ १ ३] पठितत्वात् पृथिव्या अन्तरिक्षस्यारतिमलमतिं पर्याप्तमतिं (21.) पूरकमित्यर्थः तत्र स्थितोऽसौ यथाकालं वृष्ट्या भूतानि पुष्णाति । तथा वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो नरेभ्यो हितो वैश्वानरस्तम् जठराग्निरूपेणान्नपाचकत्वात् । तथा ऋते यज्ञे यज्ञनिमित्तमाजातम् (22.) उत्पन्नमरणिद्वयात् । तथा कविं क्रान्तदर्शनं स्वभक्ताननुग्रहीतुमभिज्ञमित्यर्थः । तथा सम्राजं सम्यग्दीप्यमानमैश्वर्येण युक्तमित्यर्थः । तथा जनानां यजमानानामतिथिं हविर्भिः सत्कारयोग्यम् विज्ञायते हि अग्निरतिथिरूपेण गृहान्प्रविशति तस्मात्तस्योदकमाहरन्ति । आसन् आस्यत्रम् आस्यशब्दस्य सप्तम्येकवचने पद्दन् इति [पा॰ ६. १ ६३.] सूत्रेणासन्नादेशः सुपां सुलुगिति [पा॰ ७ १ ३९.] सप्तमीलोपः आसन् आस्ये आस्ये मुखे आपात्रम् (23) आभिमुख्येन पिबन्त्यनेनेत्यापात्रम् विज्ञायते हि चमसो देवपान इति चमसेन ह वाऽएतेन भूतेन देवा भक्षयन्तीति [१.४. २.१४] श्रुतेः ॥ ईदृशमग्निं देवा इन्द्रादयोऽजनयन्नित्यर्थः ॥२४॥

ª उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः । ᵇ एष ते योनिर्वैश्वानराय त्वा । ᶜ ध्रुवं ध्रुवेण म-

नसा वाचा सोममवनयामि । अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्क रत् ॥२५॥

ध्रुवदेवतं यजुः ध्रुवग्रहणऽएव विनियुक्तम् हे सोम वनुपयामेन पात्रेण गृहीतोऽसि ध्रुवोऽसि ध्रुवनामकोऽसि कीदृशस्त्वम् ध्रुवा स्थिरा क्षितिर्निवासो यस्य स ध्रुवक्षितिः क्षितिर्वासगत्योः स्थिरनिवासः आ वैश्वदेवीशसनप्रस्थानात् (24) तथा ध्रुवाणामादित्यस्थाल्यादीनां मध्ये ध्रुवतमः अतिशयेन स्थिरः तथा अच्युतानां च्युतिरहितानां क्षरणशून्यानां मध्ये अच्युतक्षित्तम अच्युते च्युतिरहिते पात्रे क्षियति निवसतीति अच्युतक्षित् अतिशयेनाच्युतक्षित् अच्युतक्षित्तम ॥ एष तऽइति सादनम् । हे ग्रह एष ते योनिः स्थानं वैश्वानराय त्वा त्वां सादयामि ॥ का॰ (25) ध्रुवꣳ होतृचमसेऽवनयति ध्रुवं ध्रुवेणेति । ध्रुवपात्रस्थं सर्वं सोमं होतृचमसे सिञ्चेत् ॥ बृहती पूर्वोऽर्धर्चो ध्रुवदेवतः उत्तर ऐन्द्रः । प्रथमतृतीयौ वष्टाक्षरौ पादौ द्वितीयचतुर्थौ दशाक्षरौ सा बृहती वैराजी गायत्री चेति पिङ्गलोक्तेः । ध्रुवेणैकाग्रेण मनसा वाचा तन्मन्त्रोच्चारणप्रवणया ध्रुवं ध्रुवग्रहेऽवस्थितं सोममवनयामि होतृचमसेऽवसिञ्चामि यद्वा ध्रुवं ग्रहं सोमं होतृचमसस्थं प्रत्यवनयामि ॥ अथा अनन्तरमिन्द्र इत् इदेवार्थे इन्द्र एव नोऽस्माकं विशः प्रजा ईदृशीः करत् इतश्च लोपः परस्मैपदेष्विती लोपः [पा॰ ३ ४ ९७] लेटोऽडाटाविल्यडागमः [पा॰ ३.४.९४] । कीदृशीर्विशः असपत्नाः नास्ति सपत्नी यासां ताः सपत्नरहिताः शत्रुशून्याः तथा समनसः समानं मनो यासां ताः स्थिरमनस्का धृतियुक्ता इत्यर्थः ॥२५॥

XI. a. यस्ते द्रप्स स्कन्दति यस्तेऽअꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतꣳ स्वाहा ।

b. देवानामुत्क्रमणमसि ॥२६॥

का॰ [९.६.२८] यस्तऽइति विप्रुषाꣳ होमं जुहोति । अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात्तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा तमध्वर्युर्ददाति ॥ सोमो त्रिष्टुप्स्वाहेति यजुरन्ता देवश्रवो-

दृष्टा । हे सोम ते तव यो द्रप्स रसैकदेशः स्कन्दति भूमावन्यत्र वा पतति यश्च ते तवांशु स्तोक ग्रावच्युत ग्राव्णा सकाशात्पतित यश्च धिषणयो अधिषवण फलकयोरुपस्थादुत्सङ्गात् स्कन्दति वावेत्रा य अंशुरध्वर्यो सकाशात्स्कन्दति वा यश्च य अंशु पवित्रात्परि स्कन्दति यत सुताद्धित्परि स्कन्दतीति भाव हे सोम ते तव त द्रप्समंशु च स्वाहाकारेण जुहोमि । किम्भूत तम् मनसा वषट्कृत सकल्पित वषट्कारेण च स्वाहाकारेण च जुहोमीत्यर्थ ॥ का० [९ ६ २२] ग्रन्तरतृण चात्वाले प्रास्यतीति । अध्वर्युणा वेद्यं तृणं गृहीते तयोरेनं चात्वाले निधेत ॥ चात्वालदेवतम् हे चात्वाल त्व देवानामुत्क्रमणमसि उत्क्रामति गच्छति स्वर्गं यस्मात्तदुत्क्रमण देवास्त्वत्त स्वर्गं गच्छन्ति अतो हि देवा स्वर्गमुदक्रामन्निति [४ ० ५ १] श्रुत ॥२६॥

\॥ a प्राणाय मे वर्चोदा वर्चसे पवस्व । b व्यानाय मे व॰ । c उदानाय मे व॰ । d वाचे मे व॰ । e क्रतूदक्षाभ्या मे व॰ । f श्रोत्राय मे व॰ । g चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् ॥२७॥

का॰ [९ ७ ९] ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन्प्राणाय म इति प्रतिमन्त्रमिति । प्राणायेत्यादयो मन्त्रा अवकाशसंज्ञास्तान्वाचयेत यद्गृहणक्रमेण ग्रहान्यजमान दर्शयति ॥ लिङ्गोक्तदेवतान्येकादश । यज्ञस्येति प्राणास्तान्प्राणरूपेण दर्शयति हे उपांशो यस्त्व स्वभावत एव वर्चोदा तेजसो दाता स त्व मे मम प्राणाय पदर्थयितवायोर्वर्चसे पवस्व प्रवर्तस्व ॥ उपांशुसवनम् व्यानाय मे सर्वशरीरगतवायवे पवस्व अन्यत्पूर्ववत् ॥ अन्तर्याममम् उत्कदेशस्थो वायुरुदान ॥ ऐन्द्रवायवम् वागिन्द्रियाय ॥ मैत्रावरुणम् क्रतु काम दक्षस्तस्य सम्वृद्धि तद्द्वयसाधनरूपाय वर्चसे प्रवर्तस्व ॥ आश्विनम् श्रोत्राय श्रोत्रेन्द्रियाय ॥ शुक्रामन्थिनौ युगपत् हे शुक्रमन्थिनौ मे मम चक्षुषो पाटवाय तद्रूपाय वर्चसे युवा पवेथा प्रवर्तेथाम् ॥२७॥

a आत्मने मे वर्चोदा वर्चसे पवस्व । b ओजसे मे व॰ । c आयुषे मे व॰ । d विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् ॥२८॥

आग्रयणाम् । ममात्मने ओजस्व स्वास्थ्याय वर्चसे पवस्व ॥ उक्थ्यम् ओज सर्वेन्द्रियपाटव शारीर बल वा तद्रूपाय वर्चसे पवस्व ॥ ध्रुवम् आयुर्निर्दिष्टजी वन (26) तद्रूपाय वर्चसे पवस्व ॥ पूतभृदाधवनीयो युगपद्विवेच्यते । हे पूतभ दाधवनीयो सर्वाभ्यो मम प्रजाभ्य प्रजार्थं यद्वर्चस्तेजस्तद्दर्यं युवा पवेथाम् किम्भ तो युवाम् वर्चोदसो वर्चो दत्तस्तो वर्चोदसो सर्वत्र ददातिरसुन्प्रत्यय । यद्वात्र प्राणायेत्यादिचतुर्येना पद्या त्रिपरिणाम प्राणव्यानादीना यद्वर्चस्तदर्थं पवस्वे त्यर्थ यद्वा यस्य प्राणाय वर्चोदा स मे वर्चसे ब्रह्मवर्चसाय पवस्व एव सर्वत्र ॥२८॥

a कोऽसि कतमोऽसि कस्यासि को नामासि । यस्य ते नामामन्महि य त्वा सोमेनातीतृपाम । b भूर्भुव स्व सुप्रजा प्रजाभि स्या७ सुवीरो वीरै सुपोप पोपै ॥२९॥

का° [१ ७ १४] कोऽसीति द्रोणकलशमिति । द्रोणकलशमभिमृशति ॥ प्राजापत्या वर्धमानोष्णिक् । यस्या प्रथम पाद षडक्षरो द्वितीय सप्ताक्षरस्तृतीयोऽष्टा क्षरश्चतुर्थो नवाक्षर सा त्रिंशद्वर्णा वर्धमानोष्णिक् । अध्यस्तप्रजापति द्रोणकलश माह हे द्रोणकलश त्व क प्रजापतिरसि कतमोऽतिशयेन प्रजापतिरसि तथा कस्य प्रजापतेरसि को नाम प्रजापतिनामासि प्रजापतेरनन्यभूतोऽसीत्यर्थ । कि च वय यस्य ते तव नाम अमन्महि विजानीम मन ज्ञाने च पुनर्य द्रोणकलश त्वा वय सोमेन अतीतृपाम तर्पितवन्त स त्वमस्मान्विदितनाम्न कुरु तर्पय च कामैरिति शेष ॥ का° [१ ७ १५] भूर्भुव स्वरिति जपतीति ॥ हे भूर्भुव स्व अग्निवायुसूर्या प्रजाभि अह सुप्रजा शोभनप्रजायुक्त स्या भवेयम् वीरै पुत्रै सुवीर स्या पोपै धनादिपुष्टिभि सुपोष शोभनपोषो भवेयम् ॥२९॥

XIII a उपयामगृहीतोऽसि मधवे त्वा । b उपयामगृहीतोऽसि माधवाय त्वा । c उ° शुक्राय त्वा । d उ° शुचये त्वा । e उ° नभसे त्वा । f उ° नभस्याय त्वा । g उ° ऽसीषे त्वा । h उ° ऽस्तूर्जे त्वा ।

ॐ सहसे त्वा । ॐ सहस्याय त्वा । ॐ तपसे त्वा ।
ॐ तपस्याय त्वा । ॐ अंहसस्पतये त्वा ॥३०॥

का० [९ १३ १४] ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति द्वादश प्रतिमन्त्रमध्वर्यू पूर्वं पूर्वं मन्त्रं उत्तरं उत्तरं प्रतिप्रस्थातुरिति । अथ द्विप्रतिप्रस्थातारावृतुग्रहैर्द्वादशभिश्चरतः उपयामेत्याद्या द्वादश मन्त्रा तत्र षट्सु मन्त्रयुग्मेषु पूर्वं पूर्वो मन्त्रोऽध्वर्योः उत्तर उत्तरः प्रतिप्रस्थातुरिति मन्त्रविवेकः ॥ द्वादश लिङ्गोक्तानि । हे ग्रह त्वमुपयामेन गृहीतोऽसि मधवे मधुनाम्ने चैत्रमासाय त्वा गृह्णामीति शेषः । माधवाय वैशाखाय त्वा गृह्णामि । मधुमाधवौ वासन्तौ मधुमधुजनन वसन्ते प्रसज्यते ॥ शुक्राय ज्येष्ठाय त्वा गृह्णामि । शुचये त्वा आषाढमासाभिमानिदेवाय त्वा गृह्णामि । शुक्रशुची ग्रीष्ममासौ शुच शोषणाऽग्नेरस्य धाता ॥ नभसे श्रावणमासाय सामं त्वा गृह्णामि । नभस्याय भाद्रपदमासाभिमानिने त्वा गृह्णामि । नभोनभस्यौ वार्षिकौ मासौ मेघबाहुल्यात् भात्यत्र सूर्य इति नभा नभस्यश्च ॥ इषे आश्विनमासाय त्वा गृह्णामि ऊर्जे कार्तिकमासाय त्वा गृह्णामि इषमन्नम् ऊर्जं तदुपसेचनं दध्यादि (27) तदत्र प्रचुरं भवति मनुष्याणां लोपाद् भेदोपचारात् ऊर्ज्शब्देन (28) शारदौ मासावुच्येते ॥ सहसे मार्गशीर्षमासाय । सहस्याय पुष्यमासाय सहःसहस्यौ हैमन्तिकौ मासौ सहसे प्रसह्नायस्य प्रयोगः प्रसह्ननमभिभवनम् यतो हेमन्तः शीतेन नरानभिभवति ॥ तपसे माघमासाय । तपस्याय फाल्गुनाय तपस्तपस्यौ शैशिरौ मासौ तपति सूर्यो यत्रात्यन्तं स तपा स्तपस्यश्च ॥ का० [९ १३ १८] त्रयोदश गृह्णीयादिद्दनुपयामगृहीतोऽस्यंहसस्पतये त्वेति । इहन्धेर्मुख्यत्रयोदशनृतुग्रहं गृह्णीयात् ऐच्छिको विकल्प ॥ हे ग्रह त्वमुपयामेन पात्रेण गृहीतोऽसि तादृशं त्वामंहसः पतयेऽधिकमासाभिमानिने गृह्णामीति शेषः । अंहः पापं तस्य पतिः । मलमासत्वात् द्वादशस्वपि पतति पदार्थलोकान्तरम् गमनोत्पत्त्यादिवत्तस्य त्रपया इति अंहःपदार्थः गतिस्तस्य पतिः त्रयोदशो मासः आदित्यगतिवशेन जायते ॥३०॥

॥१॥ इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥

b उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा । c एष ते योनिरिन्द्राग्निभ्यां त्वा ॥३१॥

का० [९ १३ २०] ऐन्द्राग्नं गृह्णाति । प्रतिप्रस्थातेन्द्राग्निदेवताकं ग्रहं गृह्णीयात् ॥ ऐन्द्राग्नी गायत्री विश्वामित्रदृष्टा । हे इन्द्राग्नी युवां सुतमभिषुतं सोमं प्रति आगतमागच्छतम् गच्छतेर्व्यत्ययेन शपो लुक् अनुदात्तेति [पा० ६ ४ ३७] मलोपश्च । किम्भूतं सोमम् गीर्भिर्नभो वरेण्यम् गीर्भिः त्रयीलक्षणाभिर्वाग्भिः नभ इवादित्य इव वरेण्यो वरणीयः प्रार्थनीयस्तम् नभ आदित्यो भवति नेता भासां ज्योतिषां प्रभवोऽपीति [निरु० ३ ११ (१४)] यास्कोक्तेर्नभ आदित्यः स्तूयमानम् यद्वा गीर्भिः स्तुतिरूपाभिर्वाग्भि॰ सुतमिति शेषः नभो नभःस्थितैः स्वर्गस्थैर्देवैर्वरेण्यं प्रार्थनीयम् नभशब्देन लक्षणया नभस्था देवा उच्यन्ते । किं च हे इन्द्राग्नी युवामस्य सोमस्य मंत्राचितं स्वमंशं पात पिबतम् पिबादेशाभावश्छान्दसः । किम्भूतौ युवां धियेषिता धिया यजमानबुद्ध्या इषितौ प्रेषितौ प्रार्थितौ ॥ एवं देवावुक्त्वा सोममाह हे सोम उपयामेन ग्रहेण गृहीतोऽसि हे ग्रह इन्द्राग्निभ्यामर्थे त्वां गृह्णामीति शेषः ॥ एष तेऽइति सादनम् । एष तव योनिः स्थानम् इन्द्राग्निभ्यामर्थे त्वां सादयामि ॥३१॥

XV. a आ घा येऽअग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ॥ b. उपयामगृहीतोऽस्यग्नीन्द्राभ्यां त्वा । c एष ते योनिरग्नीन्द्राभ्यां त्वा ॥३२॥

अग्नीन्द्रदेवत्या गायत्री त्रिशोकदृष्टा अस्या विनियोगः कात्यायनेन नोक्तः ऐन्द्राग्नग्रहे एव विकल्पः शाखान्तरे ॥ ये यजमाना अग्निना इन्धते आदीपयन्ति इष्टिपशुसोमचातुर्मास्यैर्यजन्तीत्यर्थः घेत्यनर्थको निपातः तस्य संहितायामृचि तुनुघेत्यादिना [पा० ६.३ १३३] दीर्घः । ये चानुषक् आनुपूर्व्येण क्रमेण बर्हिः स्तृणन्ति आच्छादयन्ति अनुषज्यते अनु क्रमेणासज्यते स्तीर्यतऽइत्यनुषक् कर्मणि क्विप् अकारस्य संहितायां दीर्घः आनुषगिति नामानुपूर्वस्यानुषक्ता भवतीति [निरु० ६. १४] यास्कोक्तेरानुषक्शब्देनानुपूर्व्यमुच्यते । किं च येषां यज्वनां युवा जरामृत्यु-

रुदित इन्द्र सखा मित्रत्वउपकारक ॥ हे सोम तथा यस्त्वं उपयामेन ग्रहेण त्व स्वीकृतोऽसि अग्नीन्द्रदेवार्थं त्वा गृह्णामि ॥ सादयति हे सोम एष ते योनिः अ ग्नीन्द्राभ्यामर्थे त्वा सादयामि ॥३२॥

XXI a ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वांसो दाशुषः सुतम् ।
b उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य ।
c एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य ॥३३॥

का° [१ १४ १] वैश्वदेव गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धे वोमास इति । अध्वर्यो यज्वना स्पृष्टेऽस्पृष्टे वा सति द्रोणकलशाच्छुक्रपात्रेण वैश्वदेव ग्रह गृह्णीयात् ॥ वैश्वदेवी गायत्री मधुच्छन्दोदृष्टा । हे विश्वे देवास विश्वे देवा यूय मागत आगच्छत किम्भूता यूयम् ओमास ओमा अवतीत्योमा रक्षितार अवि तारो वाजनीया (29) वेति [निरु° १२ ४०] यास्कोक्ते तर्पयितारस्तर्पणीया वा अवतेर्मन्प्रत्यय सम्प्रसारण च । तथा चर्षणीधृत चर्षणयो मनुष्यास्तान्धरति पुष्णाति तेषा ध्रियते ते चर्षणीधृत चर्षणिशब्दस्य संहिताया दीर्घ अनिष्टनिर् सन रक्षणम् इष्टप्रापणं पोषणमित्यवनधरणयोर्भेद । तथा सुतमभिषुत सोम दा शुष दत्तवतो यजमानस्य दाश्वास फल दत्तवन्त कामान्पूरयन्त इत्यर्थ । यद्वा सुत सोम पातुमिति शेष दाश्वानित्यादिना [पा° ६ १ १२] निपात ॥ हे सोम त्वमुपयामेन स्वीकृतोऽसि विश्वेभ्यो देवेभ्योऽर्थाय त्वा गृह्णामीति शेष ॥ सादय ति एष ते योनि विश्वेभ्यो देवेभ्योऽर्थाय त्वां सादयामि ॥३३॥

XXII a विश्वे देवास आगत शृणुता मऽइमꣳ हवम् । एदं बर्हिर्निषीदत ।
b उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य ।
c एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य ॥३४॥

वैश्वदेवी गायत्री गृत्समददृष्टा वैश्वदेवग्रहग्रहणेऽप्येव विकल्पेनाम्नाता । हे विश्वे देवास्तो यूयमागत अस्मद्यज्ञ प्रत्यागच्छत आगत्य च मे ममेम हवमाह्वान शृणुत श्रुत्वा इद मदीय बर्हि आनिषीदत बर्हिष्युपविशत ॥ उपयामेति पूर्ववत ॥३४॥

XVIII. a. इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ॥
b उप° ऽसीन्द्राय त्वा मरुत्वते ।
c. एष ते योनिरिन्द्राय त्वा मरुत्वते ॥३५॥

इति प्रातःसवनग्रहाः पूर्णाः अथ माध्यन्दिनसवनग्रहा उच्यन्ते । माध्यन्दिने सवने मरुत्वतीया गृह्यन्त इति तित्तिरिवचनात् । तत्र त्रयो मरुत्वतीयास्तत्र प्रथममाह का° [१० १ १४.] मरुत्वतीयमृतुपात्रेणेन्द्र मरुत्व इति । ऋतुपात्रेण मरुत्वतीयं ग्रहं गृह्णीयात् ऐन्द्रामरुत्वतीयत्रिष्टुभौ विश्वामित्रदृष्टाः । मरुतो देवा विद्यन्ते यस्य स मरुत्वान् तस्य संबोधनं हे मरुत्वः मतुवसो रु संबुद्धौ छन्दसीति [पा° ८.३ १] रुत्वम् । मरुद्भिः सहित हे इन्द्र इहास्मदीये यज्ञे सोमं पाहि पिब । कथं पातव्यमित्यत्राह यथा शार्याते शर्यातिर्नाम कश्चिद्राजा तस्य संबन्धिनि यज्ञे सुतस्याभिषुतस्य सोमस्यांशमपिबः पीतवानसि तद्वदिह पिब शर्यातो ह वा ऽइदं मानवो ग्रामेण चचारेति श्रुतिः [४ १ ५ ७] । किं च हे शूर वीर तव प्रणीती प्रणीत्या प्रणयनेनानुज्ञया सुयज्ञाः कल्याणयज्ञाः कवयः क्रान्तदर्शनास्तव शर्मन् सुखनिमित्ते (30) शर्मणि यज्ञगृहे वा आविवासन्ति त्वां परिचरन्ति विवासतिः परिचर्यार्थः ॥ उपयामेन सोम त्वं गृहीतोऽसि मरुत्वत इन्द्राय त्वां गृह्णामि ॥ सादयति एष ते योनिः मरुत्वते इन्द्राय त्वां सादयामि ॥३५॥

XIX. a. मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम ॥
b. उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते । c. एष ते योनिरिन्द्राय त्वा मरुत्वते । d. उपयामगृहीतोऽसि मरुतां त्वौजसे ॥३६॥

द्वितीयं मरुत्वतीयमाह । का° [१०.२ ६] वशिना मरुत्वतीयग्रहणं मरुत्वन्तमिति । ऋतेन पात्रेण समस्तमरुत्वतीयग्रहणम् । इहास्मिन्नस्मदीये यज्ञे तमिन्द्रं वयं हुवेम आह्वयामः ह्वेञः शपि व्यत्ययेन संप्रसारणम् । किम्भूतमिन्द्रं मरुत्वन्तं

मरुद्गणोपेतं । वृषभं जलस्य वर्षितारं । वावृधानं संहितायां दीर्घं वर्तते का मान्वर्धयति वा वर्धयतेस्तत् बहुलं छन्दसीति [पा० ७ ४. ७६] वर्तते. शानचि जुहोत्यादित्वेन श्लु श्लाविति [पा० ६ १ १०] द्वित्वम् । अकवारिम् कुत्सिता अरयो यस्य स कवारिः न कवारिरकवारिस्तम् यस्य शत्रवोऽप्यकुत्सिता वृत्रादयः यद्वा अकुत्सितमियर्ति ऐश्वर्यं प्राप्नोतीत्यकवारिस्तम् उत्कृष्टैश्वर्यम् । दिव्यं दिवि भवं लोकान्तरस्थम् । शासं शास्तीति शासः पचाद्यच् शासितारं दुष्टानां यद्वा शासनं शासस्तद्वन्तं अर्शआदित्वादच् प्रशासनवन्तम् । विश्वासाहम् विश्वं पालयितुं सहते स विश्वसाट् तम् अनन्तसमित्यर्थं भजसहृदयादीनामिति (31) णिप् यद्वा सह निरभिभवार्थः स्वयमच्युतस्य विश्वस्य सर्वस्याभिभवितारम् । नूतनाय अवसे नवीनाय पालनाय इदानींतनयजमानरक्षणाय अनुकूर्णवयम् । सहोदाम् सहो बलं ददाति सहोदास्तम् क्विप् बलप्रदम् ॥ उपयाम एष ते इत्यनयोर्व्याख्या तम् ॥ तृतीयं मरुत्वतीयमाह । का० [१० ३ ३] अनुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजस इति । कृष्णमरुत्वतीयोऽयम् (32) ॥ मरुत्वद्देवत्यं यजुः । हे मरुत्वतीय ग्रह मरुतां देवानामोजसे बलाय त्वा त्वां गृह्णामीति शेषः । ओज इति बलनाम [निघ०] स उपयामेन गृहीतोऽसि स्वबलं निधायेन्द्र प्रत्यागता मरुतोऽनेन ग्रहेण गृहीतेन सबला जाता इति भावः ॥३६॥

३७ a सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।
जहि शत्रूँ२॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥
b उ० सोन्द्राय त्वा मरुत्वते । c एष ते योनिरिन्द्राय त्वा मरुत्वते ॥३७॥

सजोषा इन्द्रेति [३७] मरुत्वाँ इन्द्रेति [३८] अग्रयस्य सोमयागस्य मरुत्वतीयग्रहणे इन्द्र विनियोग वाचःस्तोमे याचस्तोमाद्धन्या इति कात्यायनोक्तेः [२२ ६ २४] मरुत्वाँ इन्द्रेति मरुत्वतीयमित्याश्वलायनोक्तेः ॥ हे इन्द्र हे शूर वीर त्वं सोमं पिब किंभूतस्त्वं सजोषाः जुषी प्रीतिसेवनयोः जोषणं जोषः प्रीतिः असुन्प्रत्ययः तेन सह वर्तमानः संतुष्टः मरुद्भिः सह सगणः सपरिवारः मरुद्गणसहितः इत्यर्थः । वृत्रहा वृत्रं हतवान् हन्तीति अनेन सोमपानेन वृत्रं हनिष्यसीत्य-

र्थः । विद्वानितमर्थं जानान् तत सोमं पीत्वा शत्रून्वृत्रादीन् जहि मारय किं च मृधः संग्रामान् अपनुदस्व नुद प्रेरणे युद्धं निवर्तयेत्यर्थः दीर्घादटि समानपदे इति [पा॰ ८ ३ ९] शत्रूनिति नस्य रुत्वम् पूर्वस्य सानुनासिकत्वम् (33) ॥ यद्वा मृध इति पञ्चम्येकवचनं मृधः संग्रामात् अपनुदस्व शत्रूनित्यस्यानुषङ्गः ये हतावशिष्टा शत्रवस्तान्संग्रामात्पालयनार्थं प्रेरयस्व प्राणदानं कुर्वित्यर्थः । एवं रिपुनाशं कृत्वानन्तरं नोऽस्माकं विश्वतः सर्वतः अभयं कृणुहि कुरु कृञ् करणे स्वादि ॥ अयमिति व्याख्याते ॥ शत्रूनपेत्यत्र दीर्घादटि समानपदे इति [पा॰ ८ ३ ९] नस्य रुत्वम् अत्रानुनासिकः पूर्वस्य तु (34) वेति [पा॰ ८ ३ २] तत्पूर्वस्य ऊकारस्यानुनासिकत्वम् ॥३७॥

XXI a मुरुत्वाँ॥ऽइन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजासि प्रतिपत्सुतानाम् ॥

b उ॰ ऽसीन्द्राय त्वा मरुत्वते ।

c एष ते योनिरिन्द्राय त्वा मरुत्वते ॥३८॥

हे इन्द्र त्वं सोमं पिब द्व्यचोऽतस्तिङ इति [पा॰ ६ ३ १३५] संहितायां दीर्घः किमर्थं मदाय तृप्त्यै रणाय संग्रामाय च मदे सतीन्द्रो योद्धा भवति । किम्भूतस्त्वम् मरुत्वान् मरुतोऽस्य सन्तीति मरुद्गणसंयुक्तः । वृषभः वर्षिता कामानाम् । किम्भूतं सोमम् अनुष्वधम् अनु पश्चात्स्वधा तानि पुरोडाशधानामन्यद्धविःप्रयस्या लक्षणानि यस्य सोऽनुष्वधस्तम् पूर्वपदादिति [पा॰ ८ ३ १०६] षत्वम् किं च पिबेत्यत्रादि मध्वः मधुनो मधुस्वादोपेतस्य ऊर्मिं कल्लोलं जठरे उदरे आसिञ्चस्व आ नित्यमागमशासनमिति मध्व इत्यत्र नुमभावः । सोमपाने हेतुमाह हे इन्द्र त्वं प्रतिपत्सुतानाम् (35) प्रतिपत्प्रभृतिषु तिथिषु अभिषुताना सोमानां राजासि ईश्वरोऽसि किमुत चतुर्दश्यन्तेऽभिषुतानाम् त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयतऽइत्यभिप्रायः । छन्दोगाना सवने प्रतिपद्विषेत इति प्रतिपद्ग्रहणम् ॥ उपयाम एष ते इति व्याख्याते ॥३८॥

XXII a मुरुँ॥ऽइन्द्रो नृवदा चर्षणिप्रा उत द्विवर्हा अमिनः सहोभिः ।

अस्मत्रम्यावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥
b उ॰ महेन्द्राय त्वा । c एष ते योनिर्महेन्द्राय त्वा ॥३९॥

का॰ [१० २ १०] माहेन्द्रं गृह्णाति वैश्वदेववन्महां इन्द्र इति । यथा वैश्वदेवग्रहः शुक्रपात्रेण गृहीतस्तथा माहेन्द्रं ग्रहं तेनैव गृह्णीयात् ॥ माहेन्द्री त्रिष्टुप् भरद्वाजदृष्टा तृतीयपादो नवाक्षरः । इन्द्रो वीर्याय वीरकर्मणो वावृधे ववृधे वर्धते छन्दसि लुङ्लङ्लिट इति [पा॰ ३ ४ ६] वर्तमाने लिट् संहितायामभ्यासदीर्घः । किम्भूत इन्द्रः महान्महत्त्वभवः तथापि नृवत् मनुष्यवत् आ इत्यमान आगच्छति यद्वा नृवत् मनुष्यवत् आचर्षणिप्राः (36) आ समन्ताच्चर्षणीन्मनुष्यान्प्राति अभीष्टकामैः पूरयतीत्याचर्षणिप्राः प्रा पूरणे क्विप् यथा राजा अमात्यादिर्मनुष्य (37) सेवकानभीष्टकामैः पूरयति तद्वत् । उतापि च द्विबर्हाः वृहि वृद्धौ बर्हणा बर्हः वृद्धिः असुन्प्रत्ययः द्वयोः प्रकृतिविकृतिरूपयोः सोमयागयोर्बर्हो यस्य स द्विबर्हाः यद्वा द्वयोः स्थानयोर्बर्हः वृहु परिवृहौ प्रभुः मध्यमे स्थाने उत्तमे च । तथा स इति अमिनः अनितः उपमारहितः अतोऽमितबलः इत्यर्थः अमिनोऽमितमात्रो महान्भवत्यभ्यमितो वेति यास्कोक्तेः [निरु॰ ६ १६] यद्वा सहोभिः शत्रुभिर्वलैरमितः अपरिमितः अनुपहिंसितः इत्यर्थः डुमिञ् प्रक्षेपे मिञ् (38) हिंसायाम् इत्यस्य वा प्रयोगः पूर्वपदे माङ् माने सर्वत्र निष्ठान्तत्वमार्षम् । तथा अस्मद्र्यक् अस्मानभ्यञ्चतीत्यस्मद्र्यक् अस्मदभिमुखः अस्मच्छब्दे उपपदेऽञ्चतेः क्विप् विष्वग्देवयोश्चेत्यादिना [पा॰ ६ ३ ९२] विश्वग्देवयोश्चेति पदेऽस्मच्छब्दस्य टेरद्यादेशः उगिद्चामिति [पा॰ ७ १ ७०] प्राप्तस्य नुमोऽभावश्छान्दसः । स वर्धमान इन्द्र ईदृशो भूत भवतु लोडर्थे लुङ् अडभावश्छान्दसः । कीदृशः उरुः यशसा विपुलः पृथुः बलेन विस्तृतः कर्तृभिर्यजमानैः सुकृतः साधुकृतः सत्कृतः पूजित इत्यर्थः ॥ हे ग्रह उपयामेन गृहीतोऽसि महेन्द्राय त्वा गृह्णामि ॥ सादयति एष ते योनिः महेन्द्राय त्वा सादयामि ॥३९॥

XXXIII a महाँ॥इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ॥इव । स्तोमैर्वत्सस्य वावृधे । b उ॰ महेन्द्राय त्वा । c एष ते योनिर्महेन्द्राय त्वा ॥४०॥

माहेन्द्री गायत्री वत्सदृष्टा माहेन्द्रग्रहणाऽएव विकल्पेन विनियुक्ता । य इन्द्रः वत्सस्य वसनशीलस्य वत्सस्थानीयस्य वा यजमानस्य स्तोमैः स्तोत्रैर्वावृधे व-वृधे वर्धते । कीदृश इन्द्रः ओजसा तेजसा महान् क इव वृष्टिमान्वृष्टियुक्तः पर्जन्य इव यथा वर्षन्मेघो धाराजलेन महान्वर्धते ॥ उपयाम एष ते इति व्या-ख्याते ॥४०॥

XXIV. उदु॒ त्यं जा॒तवे॑दसं दे॒वं व॑हन्ति के॒तवः॑ । दृ॒शे विश्वा॑य॒ सूर्य॒ꣳ स्वाहा॑ ॥४१॥

का॰ [१० २ ४ ५] शालाद्वार्ये दाक्षिणहोमो वासःप्रबद्धꣳ हिरण्यꣳ हुत्वन्या-मवधाय चतुर्गृहीतमुदु त्यमिति । वस्त्रबद्धं स्वर्णं जुह्वां निधाय शालाद्वार्येऽग्नौ चतुर्गृहीताज्येन दाक्षिणसंज्ञो होमः कार्यः ॥ सौरी गायत्री प्रस्कण्वदृष्टा तृतीयः पादः सप्तार्णः । उ निपातः पादपूरणः त्यमिति त्यच्छब्दश्छान्दसः तच्छब्दार्थे । केतवो रश्मयः त्यं तं प्रसिद्धं सूर्यं देवमुद्वहन्ति देवो दानाद्द्योतनाद्वेति यास्कः [निरु॰ ७.२०.(39.)] । किम्भूतं सूर्यं जातवेदसम् जातं वेदो ज्ञानं धनं वा यस्मात्तम् कि-मर्थमुद्वहन्ति विश्वाय दृशे पर्याये चतुर्थी विश्वस्य दर्शनाय जगद्द्रष्टुमित्यर्थः । दृशे विख्ये चेति [पा॰ ३.४.११.] तुमर्थे निपातः । तस्मै स्वाहा सुहुतमस्तु ॥४१॥

चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः ।

आप्रा॒ द्यावा॑पृथि॒वीऽअ॒न्तरि॑क्षꣳ॒ सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च॒ स्वाहा॑ ॥४२॥

का॰ [१० २.६.] चित्रं देवानामिति द्वितीयामिति । चतुर्गृहीतेन शालाद्वार्ये द्वितीयामाहुतिं जुहोति ॥ सौरी त्रिष्टुप्कुत्सदृष्टा । परापररूपेण स्थितः सूर्योऽत्र स्तूयते सूर्यः चित्रमाश्चर्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छति वा लडर्थे लुङ् उद्यन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्याच्छत्तऽइत्याश्चर्यम् । किम्भू-तः सूर्यः देवानाम् दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषामनीकं मुखमाश्रय इत्यर्थः यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः । तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत्प्रकाश इत्यर्थः मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपा-णि सूर्योदयेऽभिव्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन्द्यावापृथिवी दिवं भूमिं चान्तरिक्षं चाप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः । ए-

अनयर्चयेण स्तुत्या परूपेण स्तौति । किम्भूतः सूर्यः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मान्तर्यामी । यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिस्तद्ब्रह्मेति श्रुतेः सूर्योऽद्वैतमनेनोच्यते (40) इति भावः तस्मै स्वाहा सुहुतमस्तु ॥४२॥

अग्ने नय सुपथा रायऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा ॥४३॥
अयं नोऽअग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसातावय७ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥४४॥

का° [१० २ ७] आग्नीध्रीयेऽग्ने नयेति । आग्नीध्रीयेऽग्नौ सकृद्गृहीतमाज्यं जुहोति ॥ का° [१० २ ८] अयं न इत्यपरामिति । द्वितीयामाहुतिमाग्नीध्रीये जुहोति ॥ इमे द्वे ऋचौ पञ्चमेऽध्याये [३६ ३७] व्याख्याते ॥४३॥४४॥

a रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु । b ऋतस्य पथा प्रेत चन्द्रदक्षिणाः । c वि स्वः पश्य व्यन्तरिक्षम् । d यतस्व सदस्यैः ॥४५॥

का° [१० २ १०] सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो रूपेण व इति । दक्षिणा गा अभिमन्त्रयते ॥ नष्टरूपानुष्टुप् दक्षिणादेवत्या नवर्चेराजन्यैर्दर्शनैर्नष्टरूपेति लक्षणात् अत्र द्वितीय एकादशार्णस्तृतीयो द्वादशार्णस्तेन पूर्णैव (11) । पूर्वं यज्ञ स्वदाननसहमाना रूपान्तराणि जगृहुः देवाः स्वैः रूपैस्तानुपागतास्ततस्ते स्वैः (12) रूपैराजग्मुरिति [४ ३ ४ १४] यज्ञस्य निदानम् । हे दक्षिणारूपा गाः रूपेण गृत्या वो युष्माकं रूपमहमभ्यागामभ्यागतोऽस्मि अतो भवतीभिरागन्तव्यं सर्वं हि स्वरूपमागच्छतीति भावः । किं च तुथो ब्रह्मरूपः प्रजापतिर्वो युष्मान्विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु ब्रह्म वै तुथ इति [४ ३ ४ १५] श्रुतेः । किम्भूतस्तुथः विश्ववेदाः वेदनं वेदो ज्ञानं विश्वं सर्वं वेदो यस्य स विश्ववेदाः सर्वज्ञः । किं च यूयमेतज्ज्ञात्वा

ऋतस्य यज्ञस्य पथा मार्गेण प्रेत प्रगच्छत । किम्भूता यूयं चन्द्रदक्षिणाः चन्द्रमिति हिरण्यनाम [निघ॰ १ २] चन्द्रं सुवर्णं यजमानदत्तस्य द्वितीयं दक्षिणा यासां ताः चन्द्रद्वितीयदक्षिणा इति प्राप्ते शाकपार्थिवादित्वाद्द्वितीयपदलोपः [पा॰ २ १ ६९ वा॰ १] ॥ का॰ [१० २ १७] सदो गच्छति वि स्वरिति ॥ दक्षिणादैवत्यम् । हे दक्षिणा अहं स्वः स्वर्गं देवयानमार्गं विख्यं विख्यामि विलोकयामि अन्तरिक्षं पितृयाणमार्गं च विख्यामि भवतीभिः सोपानभूताभिरिति भावः व्यत्ययो बहुलमिति [पा॰ ३ १ ८५] उत्तमपुरुषस्थाने परोक्षेति मध्यमः पुरुषः श्रुत्या तथा व्याख्यातत्वात् ॥ का॰ [१० २ १८] प्रेक्षते यजस्व सदस्यानिति सदस्यान् । यजमान अभिवीक्ष्य प्रेक्षते । दक्षिणादैवतम् । हे दक्षिणे त्वं यजस्व यज्ञं कुरु यथा सदस्यैः ऋत्विग्भिः पूरितैरप्यतिरिच्यसे इति शेषः । तथा त्वया यतितव्यं यथा ऋत्विजो धनैः सम्पूर्णा अधिका भवेति भावः ॥४५॥

a ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणाम् ।
b अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥४६॥

का॰ [१० २ १९] ब्राह्मणमद्येत्याग्नीध्रगमनमिति । आग्नीध्रमनुविक्ष्य स्वस्थानस्थं प्रति यजमाना गच्छति ॥ ब्राह्मणदैवत्यम् । अहमद्यास्मिन्दिने ईदृशं ब्राह्मणं विदेयं लभेय विद्लृ लाभे । किम्भूतं पितृमन्तम् प्रशस्तः पितास्यास्तीति पितृमान् तम् पित्रा विना न कश्चिज्जायतेऽतोऽत्र प्राशस्त्यार्थे मतुप् विशिष्टजनकोत्पन्नमित्यर्थः । तथा पैतृमत्यम् पितुरिमे पैतरः तद्धितप्रत्ययलोपेऽपि छान्दसी वृद्धिः मता एव मत्या स्वार्थे यत् पैतरः पितामहादयो मता सम्मता जगन्मान्या यस्य स पैतृमत्यस्तम् यद्वा पितरः पूर्वजा मताः सम्मताः श्रोत्रिया यस्य स पितृमतः पितृमत एव पैतृमत्यः यद्वा प्रशस्तजनकोत्पन्नः पितृमान् इत्युक्तः तदपत्यं पैतृमतः सर्वथा यस्य पितामहादयः श्रोत्रियाः स पैतृमत्य इत्यर्थः । तथा ऋषिं मन्त्राणां व्याख्यातारम् । तथा आर्षेयम् ऋषिषु विख्यातम् आर्षेयस्तम् ज्ञात्वा प्रवरेणानेन सुज्ञातमित्यर्थः । तथा सुधातुदक्षिणाम् शोभनो धातुः सुवर्णं दक्षिणा यस्य स सुधातुदक्षिणस्तम् ॥ का॰ [१० २ २०] उपविश्य हिरण्यमस्मै ददात्यस्मद्राता इति । अस्मै

आग्नीध्राय ॥ दक्षिणादैवत्यम् । हे दक्षिणा यूयमस्मद्दत्ता या द्वाने ब्रह्माणि या ता दत्ता सत्यो देवत्रा देवान्प्रति गच्छत । तानित्य तेषां तृप्तिं कृत्वा तत दातार प्राविशत (43) यज्ञफलं साधयन्त्यो यजमानं प्राविशतेत्यर्थः ॥४६॥

a अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे । b रुद्राय त्वा — °शीय प्राणो दात्रऽएधि वयो मह्यं प्रतिग्रहीत्रे । c बृहस्पतये त्वा — °शीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे । d यमाय त्वा — °शीय हयो दात्रऽएधि वयो मह्यं प्रतिग्रहीत्रे ॥४७॥

का° [१० २ २८] अग्नये त्वेति हिरण्यं प्रतिगृह्णीत इति । अध्वर्युप्रतिख्यातारावि(?)ति शेषः ॥ हिरण्यदैवतम् । हे हिरण्य वरुणोऽग्नेऽग्निरूपापन्नाय मह्यं त्वा त्वां ददातु पूर्वं वरुणेन यजमानाग्न्यादिभ्यो दत्तमतस्तेन तेनात्मना प्रतिगृह्णामि त्विषा न नश्यतीति दैवतादिशः । अनेन विधिना गृह्णन् सोऽहममृतत्वमारोग्यमशीय व्याप्नुयाम् हे हिरण्य त्वं दात्रे आयुश्चिरजीवित्वमेधि भव प्रतिग्रहीत्रे प्रतिग्रहकर्त्रे मह्यं मयः सुखमेधि दाता युष्मान्भवतु अहं सुखी स्यामिति भावः ॥ का° [१० २ २९] रुद्राय त्वेति गामिति । गां प्रतिगृह्णीत ॥ गोदैवत्यम् । हे गो रुद्ररूपाय मह्यं वरुणस्त्वा ददातु सोऽहममृतत्वं प्राप्नुयाम् हे गौ त्वं दात्रे यजमानाय प्राणः प्राणरूपा एधि मह्यं प्रतिग्रहीत्रे वयोऽन्नं पशुर्वा भव । दुग्धदध्यादिरूपेणान्नं सन्ततिद्वारा पशुश्च भवेत्यर्थः ॥ का° [१० २ ३०] बृहस्पतये त्वेति वास इति । वस्त्रं गृह्णीत ॥ वासोदैवत्यम् । हे वासो बृहस्पतिरूपाय मह्यं वरुणस्त्वा ददातु सोऽहममृतत्वमशीय त्वं च दात्रे त्वगेधि त्वगिन्द्रियसुखकारी भव प्रतिग्रहीत्रे मह्यं मयः सुखं च भव ॥ का° [१० २ ३१] यमाय त्वेत्यश्वमिति । अश्वं गृह्णीत ॥ अश्वदैवतम् । हे अश्व यमरूपाय मह्यं वरुणस्त्वा ददातु स यमरूपोऽहमश्वं गृह्णानोऽमृतत्वं व्याप्नुयाम् हे अश्व त्वं दात्रे हयोऽश्वो भव मह्यं प्रतिग्रहीत्रे वयोऽन्नं तद्द्वारा पशुर्वा सन्ततिद्वारा भव ॥४७॥

कोऽदात्कस्मा॑ऽअदात्कामोऽदात्कामायादात् ।
कामो दाता काम॑ प्रतिग्रहीता कामैतत्ते ॥४८॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां सप्तमोऽध्यायः ॥ ॥

का॰ [१० २ ३१] कोऽदादित्यन्यदिति । अन्यन्नन्योन्नतिलादि गृह्णीत ॥ कामदैवत्यम् । दातृदानाभिमानाभावात्स्वस्य च प्रतिग्रहदोषाभावाय च देहेन्द्रियात्मसंघाते (44) काम विविनक्ति । को नराऽदात्तस्मान् कस्मै नरायादात् । प्रश्नद्वयस्योत्तरमाह । कामोऽदात्कामायादात् न त्वं दाताहं प्रतिग्रहीता वस्कामाभिमानी देवो मत्कामाभिमानिनेऽदात् । एवं च काम एव दाता काम एव प्रतिग्रहीता नान्य । हे काम एतद्द्रव्यं ते तव दातृप्रतिग्रहीतृत्वात ॥४८॥
श्रीमन्महीधरकृते वेददीपे मनोहरे । उवटादिप्रदानोऽस्मिन् सप्तमोऽध्याय ईरित ॥

अथ काण्वशाखाया पाठविशेष ॥

I ॥ १ २ १ ॥१॥ २ b c d ३ a पार्थिवेभ्य ॥२॥ ३ a मन त्वा सुभव॰ मूर्धाय । ३ b c [विलि सुतो] d e ॥३॥

II ॥ ४ रायोऽवेयो यज्ञस्य ॥१॥ ५ स्वाहोर्मितरिक्षमन्वेमि ६ a [स्वभव] b c ॥२॥५॥

III ॥ ७ ॥१॥ ८ ॥२॥७॥ IV ॥ ९ ॥१॥ १० ॥२॥९॥ V ॥ ११ ॥१॥१०॥

VI ॥ १२ a b पण्डाय त्व ॥१॥ १२ c d [पण्ड] e f १३ [पण्ड] ॥२॥ १४ ॥३॥ १५ होत्रा धी पात्स्विष्ट यत्सुभृत यत्स्वाहा ॥४॥१४॥

VII ॥ १६ ॥१॥ १७ a ॥ ॥ १७ b c १८ ॥३॥ १९ ॥४॥ १५ होत्रा मधो पात्स्विष्ट यत्सुभृत यत्स्वाहा ॥५॥१६॥

VIII ॥ १९ ॥१॥ २० यतिन् ॥२॥ २० जिघु॰ नामि पादि सोम पवते सोम पवते ॥३ २१ a अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मै सु॰ सुभूताय पवते २ वर्चसाय पवते निद्येभ्यस्त्वा देवेभ्य । b ॥४॥२३॥

त्यिभ्योऽर्थाय त्वा त्वां सिञ्चामीति शेषः ॥ का॰ [९ ६.२१] समासिच्य तेनापिदधाति विष्ण उरुगायेति । मंत्रवमासिच्य तेनादित्यपात्रेण स्थाली पिदधाति ॥ विष्णुदेवतम् । हे विष्णो यज्ञपुरुष हे उरुगाय उरुभिर्बहुभिर्गेयते स्तूयत इत्युरुगायस्तत्संबोधनम् एष सोमस्ते तवार्पितः तं सोम रक्षस्व गोपाय आत्मनेपदमार्षम् सोम रक्षणे प्रवृत्तं त्वा त्वां मा दभन् मा दम्नुयुः मा हन्युः रक्षांसीति शेषः दभोतिर्हिंसाकर्मा ॥१॥

a कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ b आदित्येभ्यस्त्वा ॥२॥

का॰ [१० ४ ४] आदित्यग्रहं गृह्णाति सम्बत्रेभ्य कदा चनेति । होमशेषाः संस्रवास्तेभ्यः सकाशात् ॥ आदित्यदेवत्ये बृहत्यौ यजुरन्ते आदित्येभ्यस्त्वेति यजुः तृतीयो द्वादशार्णस्त्रयोऽन्येऽष्टार्णाः । सा बृहती तृतीयेऽध्याये वृहदुपस्थानमध्ये [३.३४] इन्द्रदेवत्या प्रथमोक्ता व्याख्याता च इह त्वादित्यदेवत्या यजुरन्ता चेति विशेषः । हे इन्द्र त्वं कदा चन कदाचिदपि स्तरीर्हिंसको नासि किंतु दाशुषे पञ्चम्यर्थे चतुर्थी हविर्दत्तवतो यजमानस्य हविः सश्चसि सेवसे । कुत्र उप उप इत् नु यजमानस्यात्यन्तसमीपऽएव हे मघवन्धनवन्निन्द्र भूय इत् नु पुनरेव च देवस्य ते तव दानं दीयतऽइति दानम् तव देयं हविः पृच्यते त्वया संबध्यते । यजमानेन दत्तं हविस्त्वयाङ्गीक्रियतऽइत्यर्थः ॥ हे ग्रह आदित्येभ्योऽर्थाय त्वां गृह्णामीति शेषः ॥ अत्रेन्द्रनामभिरप्यादित्य एव स्तूयते ॥२॥

a कदा चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं तऽइन्द्रियमातस्थावमृतं दिवि । b आदित्येभ्यस्त्वा ॥३॥

का॰ [१० ४ ५] अपगृह्य पुनः कदा चनेति । धारातो विहियं पूतभृतः सकाशादात्मसमीपं नीत्वा तथैव पुनरादित्यग्रहं (1.) गृह्णीयात् ॥ कदाशब्दः कालवाची चनेतिनिपातः पुनरर्थे हे आदित्य त्वं कदा चन प्रयुच्छसि कस्मिन्काले पुनः प्रमाद्यसि गुरु प्रमादे न प्रमाद्यसीति काकुः । उदयतापप्रकाशैः प्राणिनोऽनुगृह्णन् कदाचिदालस्यं करोषीति भावः । यद्वा कदा च नेति पदत्रयम् चकारोऽप्यर्थे

कदापि न प्रमुह्यसि स्वकर्मणि । किं च उभे जन्मनी देवमनुष्यसंबन्धिनी निपा सि नितरां पालयसि । किं च तुरीयं सुपां सुलुगिति [पा० ७ १ ३९] विभक्ति लोपः ते तव तुरीयं चतुर्थं मायातीतं (?) शुद्धं सवनं सुवति स्वकार्ये जगत्प्रेर यति सवनं नन्द्यादित्वाल्ल्युप्रत्ययः जगत्प्रवर्तकम् अमृतमनश्वरं विज्ञानानन्दस्व भावं यदिन्द्रियं वीर्यं तद्दिवि द्युलोके मण्डलान्तरे आतस्थौ आभिमुख्येन स्थितम् तदुक्तं पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । एवमादित्यं परापररूपे णाख्यानृचि स्तुतः ॥ यद्वास्या ऋचोऽर्थान्तरम् प्रशब्दो निषेधे चनशब्दोऽप्यर्थे हे आदित्य त्वं यदा चन कदापि प्रमुह्यसि न प्रमाद्यसि किंतु उभे वर्तमानभाविनी जन्मनी निपासि रक्षसि । तृतीयमित्यर्थे व्यत्ययेन तुरीयशब्दः प्रयुक्तः हे आदित्य ते तव यत्तृतीयं सवनं तस्मिन्दिवि द्युलोकसमाने सवने इन्द्रियमिन्द्रस्य वृष्णिः रूपममृतं सुधासवं हविः आतस्थौ समन्तात्स्थितम् ॥ हे आदित्यग्रह आदित्येभ्यो ऽर्थाय त्वा गृह्णामीति शेषः ॥३॥

१ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् । आदित्येभ्यस्त्वा ॥४॥

का [१० ४ ६] द्वाभ्यां प्रीणात्येन पात्रेणेति मध्ये वा यज्ञो देवानामिति । ए नमादित्यग्रहं द्वाभ्यां त्रिष्टुब्भ्यां ॥ आदित्यदेवत्या यजुरन्ता त्रिष्टुप्कुत्सदृष्टा आदि त्येभ्यस्त्वेति यजुः । यज्ञो देवानामादित्यानां शुम्नं सुखं कर्तुं प्रत्येति प्रत्यागच्छति अतो हे आदित्यासः आदित्या यूयं मृडयन्तः सुखयन्तः सुखकर्तारोऽस्माकं भवत अन्येषामपि दृश्यतेऽइति [पा० ६ ३ १३७] संहितायां दीर्घः । किं च वो युष्माकं या सुमतिः शोभनबुद्धिरनुग्रहरूपा सा अर्वाची अस्मदभिमुखी आववृत्यात् आ वर्तताम् बहुलं छन्दसीति [पा० ७ ४ ७८] वर्ततेर्लिङि शपः श्लुः अभ्यासस्य गुणाभाव श्च । किं च अंहोश्चित् अंहुः पापकारी चित् अप्यर्थे अहार्दननशीलस्य पापिनो ऽपि या सुमतिर्वरिवोवित्तरा वरिवो धनं विन्दति लभतेऽइति वरिवोवित् अ तिशयेन वरिवोवित् वरिवोवित्तरा पापिना या सुमतिर्धनलम्भयित्री असत् भवेत् सा सुमतिरस्मदभिमुखी आववृत्यादिति संबन्धः । हे ग्रह आदित्येभ्यो देवेभ्यस्त्वां गृह्णामीति शेषः ॥४॥

a विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व ।

b अदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुत ।
पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे ॥५॥

का° [१० ४ ७] उपांशुमन्वनेन मिश्रयति विवस्वन्नादित्येति । पात्रेण दधि सोमं च मिश्रयेत् ॥ आदित्यदेवत्यम् । तमांसि विवासयति नाशयति विवस्वान् यद्वा विशिष्टं वसु धनमस्येति विवस्वान् मतो ङिल्लोपश्छान्दसः तत्संबोधने हे विवस्वन् हे आदित्य एष पात्रस्थस्ते तव सोमपीथः पातुं योग्यः पीथः पीयतेऽसौ सोमश्च सोमपीथः पातव्यः सोमः आदित्यात्प्यादित्वात्पीथशब्दस्य परत्वम् [पा° ६ २ ३७] । तस्मिन्पातव्ये सोमे त्वं मत्स्व मद तृप्तो तृप्तिं कुरु बहुलं छन्दसी त्यदादित्वाद्धरपो लुक् [पा° ६ ४ ७३] ॥ का° [१० ५ ४] अदस्मै नर इत्येनमवेक्षते पत्नीति । पत्न्येन पूतभृतं पश्येत् ॥ आशीर्देवत्या जगती नरदेवत्या वा द्वादशाक्षरचतुष्पादा जगती । पत्नी वदति । हे नरो नेतारः ऋत्विग्यजमाना आशीर्दा आशिषो ददति ते आशीर्दाः सुब्लोपश्छान्दसः (3) आशिषां दातारो यूयमस्मै वचसे आशीर्वचनाय श्रद्धातन श्रदिति सत्यनामसु [निघ° ३ १०] पठितम् तप्तनप्तनथनाश्चेति [पा° ७ १ ४५] मध्यमबहुवचनस्य तनादेशः श्रद्धा कुरुत आस्तिक्यबुद्धिं कुरुतेत्यर्थः मद्वक्ष्यमाणोर्वचनं भवद्भिः श्रद्धया धारितं तथैव स्यादिति भाव । किं तदाशीर्वचनमत आह यत् दम्पती जायापती पत्नीयजमानौ वामं वननीयं संभजनीयं यज्ञफलमश्नुत प्राप्नुतः । किं च इहैव पुमान्पुरुषधर्मसंपन्नः पुत्रः जायते किं च स च पुत्रो वसु धनं विन्दते लभते । अध अथेत्यर्थः निपातस्य चेति [पा° ६ ३ १३६] संहितायां दीर्घः अथानन्तरं विश्वाहा विश्वानि च तान्यहानि च विश्वाहा कालाध्वनोरत्यन्तसंयोगे इति [पा° २ ३ ५] द्वितीया राजाहस्सखिभ्यष्टजिति [पा° ५ ४ ९१] प्राप्तस्य टच्प्रत्ययस्य वैकल्पिकत्वाच्छान्दसो वाभाव । अनन्तरं धने लब्धे सति विश्वाहा सर्वदा अरपः पापरहितः सन्गृहे स्वसदने एधते वर्धते नास्ति रपो यस्यासावरपः रपो रिप्रमिति पापनामनी भवत इति यास्कः [निरु° ४ २१] ॥ आशीर्दा आशिषां दातारो इति दम्पतिविशेषण

त्रा विभक्तिराकारः दम्पती यज्ञफलं प्राप्नुताम् तयोः पुत्रो जायताम् स च धनं लब्ध्वा नि यच्छ स्वगृहे वर्ततामिति आशीर्वचने श्रद्धां कुरुतेति सर्वार्थः ॥५॥

॥ वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥६॥

का० [१०।५।१३] भक्षयित्वाऽऽग्रयणान्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति । सवनीयपुरोडाशेडां भक्षयित्वा सवनीयसम्बन्धि कर्म समाप्य उपांश्वन्तर्यामयोरन्यतरेण सावित्रं गृह्णाति ॥ कण्डिकाद्वयात्मको मन्त्रः । सवितृदेवत्या त्रिष्टुब्भरद्वाजदृष्टा । हे सवितः सर्वस्य प्रेरयितर्देव अद्यास्मिन्दिने अस्मभ्यमस्मदर्थं वामं वननीयं कर्मफलं सावीः प्रेरय देहीत्यर्थः । षु प्रेरणे लुङ् अडभावश्छान्दसः । वाममु श्वः उ अप्यर्थे श्वोऽपि अनन्तरदिनेऽपि वामं सावीः । दिवे-दिवे तत ऊर्ध्वं दिने-दिनेऽस्मभ्यं वामं सावीः । हि यस्माद्वयमनया नलोपश्छान्दसः धिया अनया बुद्ध्या वयं वामभाजः स्याम भवेम वामं वननीयं यज्ञकर्म भजन्ति वामभाजः यज्ञानुष्ठातारो भवेम । किम्भूतम् वामस्य सम्भजनीयस्य भूरेः विस्तीर्णस्य बहुकालीनस्य क्षयस्य स्वर्गनिवासस्य मित्रत्वे इति शेषः क्षयो निवासः इत्याद्युदात्तत्वात् [पा० ६।१।२०१] क्षयशब्दो निवासार्थः । दिवे-दिवे इत्यह्नो नामसु [निघ० १।९] पठितम् । यद्वोत्तरार्धस्यायमर्थः हे देव वामस्य वननीयस्य भूरेः प्रभूतस्य क्षयस्य निवासस्य दाता भवेति शेषः । धीरिति कर्मनाम [निघ० २।१] अनया धिया सोमाख्येन कर्मणा वयं वामभाजोऽभिलषितभागिनो भवेम ॥६॥

उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि ।
जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे ॥७॥

सावित्रम् । हे सोम त्वमुपयामेन ग्रहेण गृहीतोऽसि हे ग्रह त्वं सावित्रः सवितृदेवत्योऽसि चन इत्यन्ननाम [निरु० ६।१६ (७)] चनोऽन्नं धत्त इति चनोधाः अन्नस्य धारयिता । अभ्यासे भूयांसमर्थं मन्यन्ते इति यास्कोक्तेः [निरु० १०।४२] यतस्त्वमत्यन्तं चनोधा असि अतश्चनोऽन्नं मयि धेहि स्थापय । किं च यज्ञं जिन्व प्रीणय जिन्वतिः प्रीतिकर्मा यज्ञपतिं यजमानं च जिन्व तर्पय भगाय देवायादित्यादिगु-

वायुत्नाय सवित्रे सर्वप्राणिनां प्रसवादिकर्त्रे देवाय त्वां गृह्लामीति शेषः भगमस्यास्तीति भगः अर्शआदित्वादच् (4) ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेति ॥७॥

III a उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः । विश्वेभ्यस्त्वा देवेभ्यः । b एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥८॥

का° [१० ६ ७] अभिजितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति । अभिजितेनैव सावित्रग्रहस्यपात्रेण पूतभृत सकाशान्महावैश्वदेवग्रहस्य ग्रहणं करोत्यध्वर्युः ॥ वैश्वदेवम् । हे वैश्वदेव ग्रह त्वमुपयामेन गृहीतोऽसि यत सुशर्मासि शोभनं शर्म सुखमाश्रयो वा यस्य स सुशर्मा । तथा सुप्रतिष्ठानः सुष्ठु प्रतिष्ठान पात्रे स्थितिर्यस्य तादृशोऽसि । विशेषणद्वयेन प्राणरूपोऽसीत्यर्थं प्राणो वै सुशर्मा सुप्रतिष्ठान इति श्रुतेः [8 8 1 13] ग्रहस्यानष्टपवादनस्य च प्राणहेतुत्वाद्ग्रहस्य प्राणत्वम् । यस्मादीदृशोऽसि तस्माद्बृहदुक्षाय बृहन्महांश्चासौ उक्षा सेक्ता च बृहदुक्षः तस्मै महते सेक्त्रे जगदुत्पादयित्रे प्रजापतये नमोऽन्नं भवितुमर्हमीति शेषः नम इत्यन्ननाम [निघ° २ ७] । प्रजापतिर्वै बृहदुक्ष इति श्रुतेः [8 8 1.14]- बृहदुक्षशब्देन प्रजापतिः ॥ विश्वेभ्यो देवेभ्योऽर्थाय त्वां गृह्लामि ॥ सादयति एष ते व्याख्यातम् ॥८॥

IV. a उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम तऽइन्दोरिन्द्रियावतः पत्नीवतो ग्रहाँ२ऽऋध्यासम् ।

b अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताभूत् ।

अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत् ॥९॥

का° [१० ६ १६] उपयामगृहीतोऽसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णातीति । उपांश्वन्तर्यामपात्रयोरेकतरेण प्रतिप्रस्थाता पात्नीवत ग्रहं गृह्णाति ॥ सोमदेवतम् हे देव दीप्यमान हे सोम त्वमुपयामेन पात्रेण गृहीतोऽसि अतस्ते तव संबन्धिनोऽन्यान्ग्रहानुपांशुप्रभृतीनहमृध्यासं समर्धयेयम् । किम्भूतस्य

ने बृहस्पतिसुतस्य बृहता महता यज्ञकर्मणा पतिर्बृहस्पतिर्यजमानस्तेन सुतस्या भिषुतस्य यद्वा बृहस्पतयो ब्राह्मणा ऋत्विजस्तैरभिषुतस्य । तथा इन्दो उन्दी क्लेदे इनत्तीतीन्दुस्तस्य क्लेदनरूपस्य रसरूपस्येत्यर्थ । तथा इन्द्रियावत इन्द्रियं वीर्यं मस्यास्तीतीन्द्रियावान् तस्य संहितायां दीर्घ । तथा पत्नीवत पत्नीसहितस्य ॥ का० [१० ६ १७] प्रचरणीशेषेण आग्नीध्रेनमन्त्र परस्तादिति । प्रचरणीशिष्टेना ग्नीध्र पात्नीवतग्रहं मिश्रयेत् ॥ प्रजापतिदृष्टात्मदेवत्या त्रिष्टुप् अत्र मन्त्रद्रष्टा स्व स्य सर्वगतपरमात्मरूपत्वमभिप्रेत्य वदति । अहं परमात्मरूप सन्परस्तात् उपरि गुलाकात् तथाहमवस्तात् अवस्तनभूलोकादौ च तिष्ठामीति शेष । यदन्तरिक्ष मध्यवर्तिलोकरूपमस्ति तदु तदपि मे देहधारिणो मम पिताभूत् पितृवत्पालक मभवत् । अहं परमात्मरूप सन्नभवम् उपरिष्टादवस्ताच्च स्थित्वा सूर्यं ददर्श पश्या मि । देवानामिन्द्रादीनां यत्परमं गुह्यं अत्यन्तं गोप्यं यदस्ति तदेवाहमस्मि ॥९॥

a अग्ना३इ (b) पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ।

b प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ॥१०॥

का० [१० ६ १९] अग्ना३इ पत्नीवन्नित्युत्तरार्धे जुहोतीति । पात्नीवत ग्रहशेषं उत्तरभागे जुहोति ॥ अग्निर्देवत्यम् । एचोऽप्रगृह्यस्येत्यादिना [पा० ८ २ १०७] अग्नेन्द्रगतस्य एकारस्य आ इ इत्यादेशौ आकारस्य प्लुतत्वम् हे अग्ने हे पत्नी वन् पत्नीयुक्त त्वष्ट्रा देवेन सजू समानप्रीति सन् त्वं सोमं पिब स्वाहा सुहुत मस्तु ॥ का० [१० ७ ३] पत्नीं सह प्रजनायरणीत्तरल उद्गात्रा समी क्षयति प्रजापतिर्वृषासीति । नेष्टा पश्चिमद्वारेण पत्नीं सह प्रवेश्योद्गातुरुत्तरत स्थित्वोद्गातारं पश्येति प्रेषयेत् सा च तं पश्येत् ॥ हे उद्गात प्रजापति प्रजानां पालनरूप यथासि तथा भवसि रेतोधा रेतसो वीर्यस्य धारयिता चासि । एवं भूतस्त्वं रेतो वीर्यं मयि धेहि स्थापय तथा वृष्णो वीर्यसेक्तु रेतोधसो वीर्यस्य धारयितु प्रजापतेस्ते तवानुग्रहात् रेतोधां रेतसो धारयितारं प्रजोत्पादनसमर्थं पुत्रमशीय प्राप्नुयाम् अत्रोद्गातरि गमनादादिव लिङ्गमुक्तमिदं वचनं ॥१०॥

V. a उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वा ।
b हर्योर्धाना स्थ सहसोमा इन्द्राय ॥११॥

का॰ [१० ८ १] द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति । आग्रयणादिति शेषः ॥ ऋक्सामदेवत्यम् हे ग्रह त्वं हरिर्हरितवर्णोऽसि हरी रश्मिर्हरिः सोमो हरिर्हरितवर्णवानित्यभिधानात् उपयामेन गृहीतश्चासि किंभूतस्त्वम् हारियोजनः हरी इन्द्राश्वौ योजयतीति हरियोजन इन्द्रस्तस्यायं हारियोजन इन्द्रसंबन्धी तं त्वा त्वां हरिभ्यामृक्सामभ्यां गृह्णामीति शेषः । ऋक्सामे वै हरीऽऋक्सामाभ्या७ ह्येनं गृह्णातीति श्रुतेः [४ ४ ३ ६] ॥ का॰ [१० ८. २] धानाश्चावपति हर्योर्धाना इति । हारियोजने भ्रष्टयवान्निदध्यात् ॥ धानादेवत्यम् सहसोमाः सोमेन सहिता धाना भ्रष्टयवा यूयमिन्द्राय इन्द्रस्य हर्योः हरितवर्णयोरश्वयोः स्थ भवथ इन्द्राश्वसंबन्धिनो यूयमित्यर्थः ॥११॥

यस्तेऽअश्वसनिर्भक्षो यो गोसनिस्तस्य तऽइष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ॥१२॥

का॰ [१० ८.५] यस्तेऽअश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्तीति । सर्वर्त्विजो धाना आदाय मन्त्रेणावघ्रायोत्तरवेदौ क्षिपन्ति ॥ भक्षद्रव्यदेवत्यम् हे धानासहित सोम भक्षद्रव्य यस्ते तव भक्षो भक्षणमश्वसनिः षणु दाने अश्वान्सनोतीत्यश्वसनिः अश्वानां दाता यश्च ते भक्षो गाः सनोति गवां दाता तस्य तादृशस्य ते तव तादृश भक्षमुपहूतोऽनुज्ञातोऽहं भक्षयामि । कीदृशस्य ते इष्टयजुषः इष्टानि यजूंषि यस्य स इष्टयजुस्तस्य । तथा स्तुतस्तोमस्य उद्गातृभिः स्तुताः स्तोमाः स्तोत्राणि यस्य स स्तुतस्तोमस्तस्य । तथा शस्तोक्थस्य होतृभिः शस्तानि उक्थानि शस्त्राणि यस्य स शस्तोक्थस्तस्य । तथा उपहूतस्याभ्यनुज्ञातस्य तदेतानि भवन्तीत्यर्थः (7) ॥१२॥

a. देवकृतस्यैनसोऽवयजनमसि । b. मनुष्यकृतस्यैनसोऽवयजनमसि ।
c. पितृकृतस्यैनसोऽवयजनमसि । d आत्मकृतस्यैनसोऽवयजनमसि ।

ऽ एनस एनसोऽवयजनमसि । यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ॥१३॥

का० [१० ८ ६] शम्याधान देवकृतस्येति प्रतिमन्त्रमिति । षट् यजूंषि शकलानि सर्वेऽग्नौ निदध्यु ॥ यजुर्लिङ्गोक्तदेवत्यानि हे शकल त्वं देवकृतस्य देवविषये विहितस्य एनसो यज्ञनाशादिलक्षणस्य पापस्य अवयजनमसि नाशकं भवसि अवपूर्वो यजिर्नाशनार्थ अवयजतीत्यवयजनम् ॥ मनुष्यकृतस्य मनुष्येषु कृतस्य द्रोहनिन्दादेरेनसोऽवयजनमसि ॥ पितृकृतस्य पितृषु कृतस्यैनसः श्राद्धाकरणादेर्नाशनमसि ॥ आत्मविषये कृतस्य पापस्यात्मनिन्दादेर्नाशनमसि ॥ एनस एनस यावन्ति पापानि तावतां सर्वेषां नाशनमसि ॥ किं च विद्वान् ज्ञाना ज्ञानपूर्वकं यदेनः पापमहं चकार कृतवान् अविद्वान् अज्ञानपूर्वं च यदहमेनश्चकार तस्य सर्वस्यैनसः ज्ञानाज्ञानपूर्वस्य पापस्य त्वमवयजन नाशनमसि ॥१३॥

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥१४॥

का० [१० ८ ७] अवेक्षा चात्वाले पवास्य चमसान्पूर्णपात्रानवमृशति दक्षिणेनानयाय सं वर्चसेति । पूर्णपात्रानुदकपूर्णानित्यर्थ ॥ त्वाष्ट्री त्रिष्टुप् व्याख्यातापि [२ २४] व्याख्यायते । वर्चसा ब्रह्मवर्चसेन वयं समगन्महि सगता भवाम गमेर्लङि ब्रह्मादिभ्यो लुकि उत्तमबहुवचने मो नो धातोरिति [पा० ८ २ ६४] मस्य नकारः । पयसा क्षीरादिरसेन समगन्महीत्यनुवर्तते । तनूभिरनुष्ठानक्षमैः शरीरावयवैः समगन्महि । शिवेन समीचीनेन कर्मश्रद्धायुक्तेन मनसा समगन्महि । किं च सुदत्रः शोभनदान त्वष्टा देवो रायो धनानि विदधातु । तन्वः शरीरस्यास्मदीयस्य यद्विलिष्टं विलिष्टम् लिश अल्पीभावे निष्ठायां विशेषेण न्यूनमङ्गं तदनुमार्ष्टु न्यूनपरिहारेणानुकूलं कृत्वा शोधयतु ॥१४॥

V. समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा ॥१५॥

